|| श्रीः ||

चौखम्बा संस्कृत ग्रन्थमाला

ग्रन्थाङ्काः २४६, २८६

( ग्रन्थ संख्या ५० )



|| श्रीः ||

# सांख्यसंग्रहः

[ श्रीषिमानन्द–( क्षेमेन्द्र )–विरचितं 'सांख्यतत्त्वविवेचनम्', श्रीभावागणेशविरचितं 'सांख्यतत्त्वयाथार्थ्यदीपनम्', 'सर्वोपकारिण्यभिधकापिलसूत्रटीका', 'सांख्य-सूत्रविवरणाख्य-कापिलसूत्रवृत्तिः', 'श्रीतत्त्वसमाससूत्रवृत्तिः', यजुर्वित्-केशवविरचिता 'सांख्यार्थतत्त्वप्रदीपिका', कविराजयतिविरचितः 'सांख्यतत्त्वप्रदीपः', आचार्यकृष्णमिश्रकृता 'तत्त्वमीमांसा', 'सांख्यपरिभाषा' च । ]

सम्पादकः

**म० म० श्रीविन्ध्येश्वरीप्रसादद्विवेदी**

Vindhyeshwari Prasada Dvivedi

प्रस्तावनारचयिता

श्रीसत्कारिशर्मा वङ्गीयः

**चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१**

१९६९

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१
मुद्रक : विद्याविलास प्रेस, वाराणसी-१
संस्करण : द्वितीय, सं० २०२६ वि०
मूल्य : १२-००



प्रधान शाखा
चौखम्बा विद्याभवन
चौक, पो० बा० ६९, वाराणसी-१
फोन : ३०७६

THE
CHOWKHAMBA SANSKRIT SERIES
A
Collection of Rare & Extraordinary Sanskrit Works.
Nos. 246, 286
( Work No. 50 )

# SĀṂKHYA-SAṄGRAHA

*A Collection of nine works on the Sāṃkhya Philosophy, viz. Sāṃkhyatattvavivecana of Śrī Ṣimānanda ( Kṣemendra ), Sāṃkhyatattvayāthārthyadīpana of Śrī Bhāvāgaṇeśa, Sarvopakāriṇī Commentary on the Sūtras of Kapila, Sāṃkhyasūtravivaraṇa, Tattvasamāsa-sūtravṛtti, Sāṃkhyārthatattvapradīpikā, Sāṃkhyatattvapradīpa of Kavirāja yati, Tattvamīmāṃsā of Ācārya Kṛṣṇa Miśra and Sāṃkhya-paribhāṣā.*

EDITED BY
M. M. VINDHYEŚVARĪ PRASĀDA DVIVEDĪ

WITH
AN INTRODUCTION BY
ŚRĪ SATKĀRIŚARMĀ VAṄGĪYA

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1
1969

Publisher : The Chowkhamba Sanskrit Series Office, Varanasi.
Printer : Vidyavilas Press, Varanasi-1
Edition : Second, 1969.
Price : Rs. 12-00


Publishers and Oriental & Foreign Book-Sellers
K. 37/99, Gopal Mandir Lane
P. O. Chowkhamba, Post Box 8, Varanasi-1 (India)
Phone : 3145



# भूमिका

मनुस्मृतौ—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ इति ।

याज्ञवल्क्यस्मृतौ च—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ॥
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति ।

विष्णुपुराणादौ—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति च त्रयम् ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः ॥ इत्यादि ।

अत्र चतुर्दशविद्यासु अष्टादशविद्यासु वा सांख्यशास्त्रस्य नामापि नास्तीति न्यायस्यानेकात्मप्रतिपादकत्वादनेकात्मप्रतिपादकानि वैशेषिकसांख्ययोगादीनि शास्त्राणि न्यायविस्तरपदेन संगृहीतानि भवन्तीति हृदयम्, तथात्वे छान्दोग्योपनिषदि तृ० प्रपाठके सप्तदशखण्डे "तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच" इति । भगवता श्रीकृष्णेन तु भगवद्गीतायाम् पञ्चमाध्याये—

सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ इति ।

चतुर्थाध्याये—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ॥ इति ।

अपि च श्वेताश्वतरोपनिषदि षष्ठाध्याये—

तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपापैः ॥ इति ।

अत्रेदं न भ्रमितव्यं यत् तदानीं कापिलं सांख्यं नासीदेव पञ्चमाध्याये-ऽत्रैवोपनिषदि "ऋषिं प्रसूतं कपिलं यस्तमग्रे" इत्युक्तत्वात्। देवकीपुत्रेण भगवता श्रीकृष्णेन भगवद्गीतायाम् दशमाध्याये "सिद्धानां कपिलो मुनिः" इत्युक्तत्वात्। इत्थं च कापिलं सांख्यशास्त्रमतीव श्रद्धेयम्। तच्च सांख्यं सूत्र-षडध्यायी समाससूत्रं चेति द्विविधमुपलभ्यते अस्योपाख्यानं समाससूत्रसर्वो-पकारिणीटीकायामुक्तमपि च समाससूत्रनाम्नापि द्वैविध्याश्चर्यशङ्कानिरासः तत्र सूत्रषडध्याय्याः भाष्यं वृत्तिश्च प्रकाशितमेव अन्येऽपि सांख्यतत्त्वकौमुदीसांख्य-चन्द्रिकागौडपादभाष्यादयोऽनेके ग्रन्थाः प्रकाशिताः परं तु—

समाससूत्रमालम्ब्य व्याख्यां पञ्चशिखस्य च।
भावागणेशः कुरुते तत्त्वयाथार्थ्यदीपनम्॥

इत्युक्त्या महर्षिकपिलप्रशिष्यपञ्चशिखाचार्यो[1]ऽनुसृतोऽपि समाससूत्र-ग्रन्थ इदानीं लुप्तप्रचार इति तस्य बहूनि व्याख्यानानि[2] सङ्कलय्यास्मिन् सांख्यसंग्रहे प्रकाशयितुं प्रवृत्तोऽस्मि। अत्र केचिद्वदन्ति समाससूत्रमेव महर्षिकपिलप्रणीतं सांख्यशास्त्रं सूत्रषडध्यायी तु विज्ञानभिक्षुणैव प्रणीतेति। तन्मन्दम्, विज्ञानभिक्षुसमयाद्बहु पूर्वं भोजराजेन षडध्याय्या व्याख्यातत्वाद् विस्तरस्तु न्यायवार्तिकभूमिकायां द्रष्टव्य इति शम्।

गवर्नमेन्टसंस्कृतकालेज
सरस्वतीभवन बनारस
२६ मई १९१६ ई०

—विन्ध्येश्वरीप्रसादद्विवेदी

---

१. कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये।
पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः॥ इति सांख्यतत्त्वकौमुद्याम्।

२. सांख्यतत्त्वविवेचनम् श्रीषिमानन्द (क्षेमेन्द्र) विरचितम्।
सांख्यतत्त्वयाथार्थ्यदीपनम् श्रीभावागणेशविरचितम्।
समाससूत्रसर्वोपकारिणी टीका। कापिलसूत्रवृत्तिः। तत्त्वसमाससूत्रव्याख्या। तत्त्वसमाससूत्रवृत्तिः। सांख्यसूत्रप्रदीपिका। एतानि व्याख्यानानि।
प्रसङ्गादन्येऽपि ग्रन्थाः संगृहीता यथा—सांख्यतत्त्वप्रदीपः। तत्त्वमीमांसा। सांख्यपरिभाषा।

# प्रस्तावना

दुःखपरिहाराय सुखाप्तये च जीवमात्रस्य प्रवृत्तिः स्वाभाविकी। वस्तुतः सर्वविधदुःखानामात्यन्तिकमैकान्तिकं च प्रहाणमेव सुखमिति सर्वशास्त्राणाम-वितथः सिद्धान्तः। दुःखेषु चानेकविधेषु जरामरणादिपरिपूरितेऽस्मिन्नतिकराले संसारचक्रे भूयोभूयः परिक्रमणं नाम कष्टतमम्, अतस्तस्मात् परित्राणमेव सर्वदुः-खनिवृत्त्युपाय इत्यत्रापि न कस्यचिच्छास्त्रस्य विप्रतिपत्तिरवलोक्यते। संसारचक्र-भ्रमणाज्जीवात्मनस्तदेव परित्राणं मोक्षो मुक्तिर्निःश्रेयसं निर्वाणमित्यादि-परिभाषाभिर्व्यपदिश्यते। यद्यपि मोक्षस्वरूपं तत्प्राप्त्युपायश्च संहिताद्युपनिषदन्तासु श्रुतिषु बहुधा प्रतिपादितौ तथापि मुमुक्षूणां स्वस्वजन्मान्तरीणसुकृतादिजन्याधिका-रभेदाद् रुचिवैविध्याच्च गच्छति काले मार्गभेदः समजनि, श्रुतिविहितमननानु-कूल्याय चोहापोहद्वारेण तत्त्वनिर्णयार्थं दर्शनाभिधमोक्षशास्त्राणामपि प्रवृत्तिरभूत्।

मोक्षशास्त्राणां दर्शननाम्नाऽभिहितत्वे किं निदानमित्यत्र विद्वद्भिर्बहुधा विमृष्ट-पूर्वम्। दर्शनशब्दस्य 'दृशिर् प्रेक्षणे'[1] इति धातोः "करणाधिकरणयोश्च"[2] इति सूत्रेण करणवाच्यविहितल्युटा निष्पन्नत्वाद् दृश्यते प्रेक्ष्यते स्वरूपतयाऽवलोक्यतेऽनेनेति चक्षुरिति लौकिकोऽर्थः। शास्त्रे तु 'दृश्यते' यथार्थतत्त्वमनेनेत्यस्मिन्नर्थे परिभाषितत्वाद् दर्शनशब्द ऊहापोहद्वारेण तत्त्वनिर्णयपरे शास्त्रविशेषे रूढ इति न काऽपि विप्रतिपत्तिः। कामं प्रस्तुतेऽर्थे दर्शनशब्दस्य प्रयोगो न सुतरां प्राचीनस्तथापि शुक्लयजुर्वेदगतो 'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये।'[3] इति मन्त्र एव दर्शनशब्दस्य प्रयोगे निदानमिति केचिन्मन्यन्ते। 'आत्मा वा अरे द्रष्टव्यः'[4] 'तस्मिन् दृष्टे परावरे'[5] इति वा श्रुतय इत्यन्ये। वैदिकसमये तत्त्वविद्याया आप्तोपदेशमात्रत्वे दर्शनशब्दस्य प्रयोगो नासीत् किन्तु तत्त्वज्ञानविषयके विचारशास्त्रे प्रवृत्त एवायं दर्शनशब्दो व्यवहार-पदमभजतेति निश्चप्रचमेव। वस्तुतस्तु साक्षात्कृतधर्मभिर्ऋषिभिर्मनीषिभिर्वा-

---

१. पा० धा० ९८८।

२. पा० ३।३।११७।

३. शुक्लयजुर्वेदीयमाध्यन्दिनसंहिता, ४०।१५।

४. बृहदारण्यकोपनिषत, २।४।५

५. मुण्डकोपनिषत, २।२।९

नुभूतस्य तत्त्वविशेषस्य तर्केण प्रतिपादनपरं शास्त्रमेव दर्शनमिति[1] परिभाषा वेदान्तादिनास्तिकपर्यन्तदर्शनशास्त्रेषु सामान्यतया संगच्छते। अतः सांख्य-दर्शनमेव दर्शनपदवाच्यं नान्यद् वेदान्तादिकमिति यत् केनचिन् नवीनालोचक-प्रकाण्डेनोक्तं तत्तु प्रौढिवादमात्रम्।

भारतवर्षीयं दर्शनशास्त्रं मुख्यतया द्विधा विभज्यते—आस्तिकदर्शनं नास्तिक-दर्शनं चेति। एतत्त्वत्रावधेयं यत् प्राचामाचार्याणां मतेन वेदप्रामाण्याङ्गीकरणमेव आस्तिकलक्षणम्, तद्विरुद्धत्वमेव नास्तिकत्वम्। अतः सांख्ययोगन्यायवैशेषिक-मीमांसावेदान्तशास्त्राणीति षडास्तिकदर्शनानि, तदितराणि बौद्धजैनचार्वाकादीनि नास्तिकदर्शनानीत्यभिधीयन्ते।

## सांख्यदर्शनस्य महिमा

इदानीमुपलभ्यमानेषु आस्तिकदर्शनेषु सांख्यदर्शनमेव प्राचीनतममित्यत्र प्रायेण सर्वेषामेव विपश्चितामैकमत्यम्। दर्शनान्तरेभ्यः सांख्यस्य प्राचीनत्वे किं मानं तद्द्वयमग्रे विस्तरेण विमर्शयिष्यामः। इदानीं प्राचीनार्षग्रन्थेषु बहुकृत्वः समुल्लिखितः सांख्यदर्शनस्य महिमा समासतः पर्यालोच्यते। सांख्यशास्त्रं महर्षिणाऽऽदिविदुषा कपिलेन प्रवर्तितमिति न कस्यापि तिरोहितम्। स तु महर्षिः कपिलः श्रुतिष्वपि परमादरेण स्तुत इत्यहो ऋषेरस्य लोकातिशायी महिमा। यथा च श्रूयते श्वेताश्वतरोपनिषदि—

'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्विभर्ति जायमानञ्च पश्येत्।' इति।[2] सांख्यशास्त्रमपि तत्रैवोपनिषदि नाम्ना समुल्लिखितम्।[3] तदनन्तरं च महर्षिकृष्ण-द्वैपायनकृते श्रीमन्महाभारते सांख्यशास्त्रस्य मुक्तकण्ठं प्रशंसा दरीदृश्यते। तत्र सांख्यज्ञानं न केवलं यथार्थज्ञानतया प्रशस्यतमज्ञानतया[4] वा स्तुतमपि तु अखिलमेव तत्त्वज्ञानं सांख्यागतमिति उद्घोषितम्।[5] महाभारतस्य सारभूतायां

१. S. Radhakrishnan, *Indian Philosophy*, London 1929, Vol. I, pp. 43–44.

२. श्वेताश्वतरोपनिषत्, ५।२।

३. नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामम्।
तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः॥—तत्रैव, ६।१३।

४. नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्।—महाभारतम्, शान्ति पर्व, ३०४।२।

५. ज्ञानं च लोके यदिहास्ति किंचित्सांख्यागतं तच्च महन्महात्मन्।—महाभारतम्, शान्तिपर्व, २९०।१०४।



श्रीमद्भगवद्गीतोपनिषद्यपि सांख्यशास्त्रं सुमहता समादरेण समुल्लिखितम्। यथा—

'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।'[1]
'एकं सांख्यं च योगं च यः पश्यति स पश्यति॥'[2]
'अन्ये सांख्येन योगेन कर्मयोगेन चापरे।'[3]

इत्येवमादीनि।

यद्यपि प्राचीनाचार्यैः कृतेषु भाष्यटीकादिषु गीतोक्तसांख्यशब्दस्य परमार्थवस्तु-विषयकज्ञानमित्येवंरूपमर्थमवलोक्य[4] केचिदत्र पर्यवतिष्ठन्ते—गीतायां विशेषेण सांख्यशास्त्रस्य प्रशंसा नास्ति किन्तु सामान्यतया आत्मज्ञानस्यैव महिमा श्रीभगवता कीर्तित इति, तथापि तत्र सांख्येत्यस्य परमार्थज्ञानेन सह पर्यायतया परोक्षतः सांख्यस्यैव गौरवमङ्गीकर्तुं शक्यते। वस्तुतो यद्यपि सांख्यशब्दस्य प्रायेण "ज्ञानापेक्षः संन्यासः"[5] इत्येवमर्थः भाष्यकृतां श्रीमच्छंकराचार्यपादानामभिप्रेत-स्तथापि तस्य सांख्यशास्त्रोक्ततत्त्वपरत्वमपि तत्रभवद्भिर्न सर्वथा निरस्तमिति

१. श्रीमद्भगवद्गीता, २।३९।

२. तत्रैव, ५।५।

३. „ १३।२४।

४. 'एषा तेऽभिहिता सांख्ये' इत्यादिश्लोकस्थसांख्यपदं व्याख्यातार इत्थं व्याकुर्वते—
"सांख्ये परमार्थवस्तुविवेकविषये…" इति भगवच्छङ्कराचार्याः।
"सांख्ये, सम्यक् ख्यायते प्रकथ्यते वस्तुतत्त्वमनयेति संख्या उपनिषत्, तत्र विदिते सांख्ये औपनिषदब्रह्मणि विषये……" इति महाभारतटीकाकर्ता नीलकण्ठसूरिः।
"सांख्ये सम्यक् ख्यायते सर्वोपाधिशून्यतया प्रतिपाद्यते परमात्मतत्त्वमनयेति संख्योपनिषत् तयैव तात्पर्यपरिसमाप्त्या प्रतिपाद्यते यः स सांख्यः। औपनिषदः पुरुष इत्यर्थः।"—इति सर्वतन्त्रस्वतन्त्राः श्रीमन्मधुसूदनसरस्वतीपादाः।
"सम्यक्ख्यायते प्रकाश्यते वस्तुतत्त्वमनयेति संख्या सम्यग्ज्ञानं तस्मिन् प्रकाशमान-मात्मतत्त्वं सांख्यम्……" इति श्रीधरस्वामिपादाः।
"संख्या बुद्धिः। बुद्ध्याऽवधारणीयमात्मतत्त्वं सांख्यम्…" इति श्रीमद्भगवद्रामानुजाचार्याः। किन्त्वत्र 'सांख्यशब्देन सांख्यशास्त्रमेव ग्राह्यं न पुनरर्थान्तरं कल्पनीयम्' इति विज्ञानभिक्षुचरणानां विमर्शः (सांख्यप्रवचनभाष्योपोद्घातः)

५. "सांख्यैर्ज्ञाननिष्ठैः संन्यासिभिः…ज्ञानापेक्षस्तु संन्यासः सांख्यम् इति मयाऽभिप्रेतः।…" श्रीमद्भगवद्गीताशाङ्करभाष्यम्, ५।५।

त्रयोदशाध्यायवर्तिचतुर्विंशश्लोकस्य भाष्यदर्शनादवगम्यते।[1] किं पुनः श्रीमद्भगवद्गीतासु स्वयं सांख्यकर्ता महर्षिः कपिलः सिद्धश्रेष्ठत्वेन स्मृतः।[2] श्रीमद्भागवतमहापुराणेऽपि सांख्यकृतः परमर्षेः कपिलस्य भगवदवतारत्वकथनात् परोक्षतया सांख्यस्यैव महिमा समुद्घोषितः।[3]

परमर्षेः कपिलस्य भगवदवतारत्वं न केवलं श्रीमद्भागवत एव अपितु महाभारतेऽपि कृष्णद्वैपायनव्यासेनोपवर्णितम्। यथा च तत्र स्मर्यते—

'योऽसौ भूमिगतः श्रीमान् विष्णुर्मधुनिषूदनः।
कपिलो नाम देवोऽसौ भगवानजितो हरिः॥'[4]

अथवा, 'वासुदेवेति यं प्राहुः कपिलं मुनिपुङ्गवम्।'[5]

श्रीमद्रामायणेऽपि भगवता वाल्मीकिना कपिलर्षेरवतारत्वमुररीकृतम्।

तथा चोक्तम्—

'यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः।
महिषी माधवस्यैषा स एष भगवान् प्रभुः॥
कापिलं रूपमास्थाय धारयत्यनिशं धराम्।'[6]

पुराणानि च पुनः सांख्यदर्शनस्य महिमवर्णनेन परिपूरितान्येव दृश्यन्तेऽतस्तेभ्यो विशिष्टोदाहरणेनालमिति तस्माद्विरम्यते।

आयुर्वेदशास्त्रेऽपि सांख्यदर्शनस्य समादरपूर्वकः समुल्लेखो दृश्यते।

---

१. 'अन्ये सांख्येन योगेन, सांख्यं नाम—इमे सत्वरजस्तमांसि गुणा मया दृश्या अहं तेभ्योऽन्यस्तद्व्यापारसाक्षिभूतो नित्यो गुणविलक्षण आत्मेति चिन्तनम् एव सांख्यो योगस्तेन पश्यन्ति।'

२. सिद्धानां कपिलो मुनिः।—१०।२६।

३. वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया। भूतानां शेवधिं देहं बिभ्राणं कपिलं मुने॥
—श्रीमद्भागवतम्, ३।२५।१६।

पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्। प्रोवाचासुरये साख्यं तत्त्वग्रामविनिर्णयम्॥
—तत्रैव, १।३।१०।

अयं सिद्धगणाधीशः सांख्याचार्यैः सुसम्मतः। लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः॥
—तत्रैव, ३।२५।१९।

४. महाभारतम्, वनपर्व, ४७।१८।

५. तत्रैव, १०७।३२–३३।

६. श्रीमद्वाल्मीकिरामायणम्, बालकाण्डः, ४०।२–३।



स्वयं महर्षिश्चरकोऽपि सांख्यानुयायिन इत्थमस्तौत्,

'अयनं पुनराख्यातमेतद्योगस्य योगिभिः।
संख्यातधर्मैः सांख्यैश्च मुक्तैर्मोक्षस्य चायनम्॥'[1]

किं बहुना, इदानीन्तना अनेके पाश्चात्यविद्वांसो भारतीयाश्च मनीषिप्रकाण्डाः सांख्यदर्शनमादिदर्शनशास्त्रतया दर्शनानन्तराकरत्वेन विचारस्वान्तन्त्र्यप्रवर्तकत्वेन च मुक्तकण्ठं प्रशंसन्ति।[2]

## सांख्यशब्दनिरुक्तिः

कपिलप्रवर्तितं प्रकृतिपुरुषतत्त्वनिरूपणपरमिदं तन्त्रं स्मरणातीतकालत एव सांख्यनाम्नाऽभिधीयते। किन्तु का नाम सांख्यशब्दस्य निरुक्तिः को वा पुनस्तया

---

१. चरकसंहिता, शारीरस्थानम्, १।१५१।

२. तासां सर्वासां प्रशंसापराणामुक्तीनां संग्रहेण कश्चिन्महाकायो ग्रन्थ एव सम्पद्येत। अतोऽत्र दिङ्मात्रमेव दर्श्यते।

क. स्वामिविवेकानन्दपादा आहुः "………I want this to be clear because it is the first stepping stone to *Vedanta*, and it is absolutely necessary for you to know, because this is the basis of the different systems of philosophy of the whole world. There is no philosophy in the world that is not indebted to Kapila, the founder of the *Samkhya* system…….This was the first rational system that the world saw, this system of Kapila. Every metaphysian in the world must pay homage to him, and respect what he said."—*The Science and Philosophy of Religion*, Seventh Edition, Calcutta 1961, p. 28.

ख. तथा चोक्तं शार्मण्यदेशीयेन भारतीयदर्शनशास्त्रवेत्रा रिचॉर्ड गार्वे इतिनाम्ना विद्वत्प्रकाण्डेन,—"In Kapila's doctrine for the first time in the history of the world, the complete independence and freedom of human mind, its full confidence in its own powers, were exhibited."—*Philosophy of Ancient India*, p. 44. अथवा "……the most significant system of philosophy that India has ever produced."—*The Sāmkhya-pravacana-bhāṣya*, HOS, Vol. II, Second Edition, Harvard 1943, p. XIV.

निरुक्त्या साकं कापिलतन्त्रस्य सम्बन्ध इत्यस्यां जिज्ञासायामिदानीन्तनानां विपश्चितामन्योन्यं भूयान् मतभेदो विद्यते। 'संख'-नामा आचार्य आसीत्, तेनैव प्रवर्तितत्वात् सांख्यमिति प्रसिद्धिरिति चीनपरम्परानुसारिमतं नोपपत्तिसहं सांख्यशास्त्रस्य श्रुतिपुराणेतिहासेषु कपिलकृतत्वेन प्रसिद्धत्वात्, तत्र तत्र शास्त्रेषु कुत्रापि संखाचार्यनाम्नोऽश्रवणाच्च। वस्तुतः 'सांख्य'-शब्दोऽयं 'संख्या'-शब्दाद् अण्-प्रत्ययनिष्पन्न इत्यत्र न कस्यापि विप्रतिपत्तिः। किंतु 'संख्या'-शब्दस्य तात्पर्यमाश्रित्यैव मतभेदः प्रतर्वते। 'संख्या' इति तु सम्पूर्वस्य ख्याधातोः[1] चक्षिङ्धातोर्वा[2] अङि टापि च रूपम्। ख्याधातोश्चक्षिङ्धातोर्वाऽर्थनिर्देशस्य स्पष्टत्वेऽपि उपसर्गेण धात्वर्थस्य बलादन्यत्रनीतत्वात्, प्रस्तुतस्थले तात्पर्यग्रहो न सुकरः। संख्याशब्दस्तु गणनापर्यायतया लोके शास्त्रे च प्रसिद्धः। अतोऽनेकैर्विद्वद्भिः सांख्यशब्दमूलीभूतस्य संख्याशब्दस्य एकद्विक्रमेण गणनरूपं मुख्यार्थमङ्गीकृत्य प्रकृतिपुरुषादितत्त्वानां संख्या यस्मिन् शास्त्रे विहिता तत्सांख्यमिति निश्चीयते। कण्ठतः संख्योल्लेखेन तत्त्वानां परिगणनं सर्वेष्वेवेदानीमुपलभ्यमानेषु सांख्यग्रन्थेषु दृश्यत एव। यथा—

१. तत्त्वसमाससूत्रे—

'अष्टौ प्रकृतयः (१)', 'षोडश विकाराः (२)', 'त्रैगुण्यम् (४)' इत्येवमादीनि,

२. सांख्यप्रवचनसूत्रे—

'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहंकारोऽहंकारात् पञ्च तन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः (१।६१)', इति

३. ईश्वरकृष्णकृतसांख्यकारिकायाम्—

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः'॥ ३॥
'प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि॥' २२॥

इत्येवमादीनि च। अतः सांख्यदर्शनतत्त्वविचारपरिपाट्या परिगणनरूपसंख्यायाः कोऽपि सम्बन्धो न सहसा निराकर्तुं शक्यते।

किन्तु सांख्यशब्दमूलीभूतसंख्याशब्दस्य प्रागुक्तरूपं परिगणनार्थं गौणं मन्वानाः संख्याया विवेकज्ञानादिरूपमर्थमेव मुख्यं समर्थयन्ते, पूर्वोक्तसंख्यार्थ-

१. ख्या प्रकथने, पा० धा० १०६० ।

२. चक्षिङ् व्यक्तायां वाचि, पा० धा० १०१७ ।



वादिन आक्षिपन्ति चेदानीं केचित्[1]। श्रीमद्भगवद्गीतागतसांख्यशब्दस्य व्याख्यानावसरे प्रायः सर्व एवाचार्या भाष्यटीकाकर्तारः सांख्यशब्दस्य विवेकज्ञानमेवार्थमङ्गीकुर्वन्तीति त्वस्माभिः प्रतिपादितपूर्वम्। इदानीं शास्त्रान्तरेषु स्थितां सांख्यशब्दनिरुक्तिं समासेन विमृशामः। श्रीमन्महाभारते तूक्तम्[2]—

'सांख्यदर्शनमेतावत् परिसंख्यानदर्शनम्।
सांख्यं[3] प्रकुरुते चैव प्रकृतिं च प्रचक्षते॥
तत्त्वानि च चतुर्विंशत् परिसंख्याय तत्त्वतः।
सांख्याः सह प्रकृत्या तु निस्तत्त्वः पञ्चविंशकः॥' इति।

अत्र महाभारतीयश्लोके सांख्यशब्दप्रकृतिभूतः संख्याशब्दः (पाठान्तरानुसारं साक्षात्पठितो वा संख्याशब्दः) विवेकज्ञानपरतयैव प्रतिभाति। स्वयं महर्षिणा कृष्णद्वैपायनेनान्यत्रापि संख्याशब्दतात्पर्यमित्थमुदाहृतम्—

'दोषाणां च गुणानां च प्रमाणं प्रविभागशः।
कञ्चिदर्थमभिप्रेत्य सा संख्येत्युपधार्यताम्॥'[4] इति।

१. 'मध्यकाल के कुछ व्याख्याकारों ने 'सांख्य' पद में 'संख्या' शब्द को गणना-परक समझकर इस प्रकार के व्याख्यान (भागवतम्, ३।२५।१ तमश्लोकस्य श्रीधरस्वामिकृतटीकायां 'तत्त्वानां संख्याता गणकः सांख्यप्रवर्तकः' इत्यर्थः) [कोष्ठकान्तर्गतांशस्थापनं तु मम भूमिकाकर्तुः] किये हैं। वस्तुतः इसका अर्थ 'तत्त्वज्ञान' है।
—पं० श्रीउदयवीरशास्त्री, सांख्यदर्शन का इतिहास, पृ० ६ पादटीका।
सांख्यशब्देन पञ्चविंशतितत्त्वरूपमर्थं ग्रहीतॄन् भास्कराचार्यादीन् प्रकाममाक्षिप्य स्वयं ८६४००००००० संख्याकक्षराक्षरपुरुषत्वं निरूपयन्तो मूलोच्छेदिनं पाण्डित्यप्रकर्षं प्रकटीकुर्वन्ति केचिन्नवीनाः।

२. महाभारतम्, शान्तिपर्व, २९४।४१-४२ (भण्डारकरप्राच्यविद्यासंशोधनमन्दिरसंस्करणम्)।

३. अत्र 'संख्याम्' इति पाठान्तरमाश्रित्य डॉ० आद्याप्रसादमिश्रप्रमुखैर्विद्वद्भिः सांख्यशब्दनिरुक्तिनिरूपणाय बहु विमृष्टम्। किन्तु प्रागुक्तपरिशुद्धसंस्करणे, चित्रशालामुद्रणालयप्रकाशिते च संस्करणे 'संख्याम्' इति पाठो नास्माभिरुपलब्धः। प्रथमत्र 'सांख्यम्' इति उत्तरत्र तु 'सांख्याः (प्रकुर्वते)' इति च पाठौ। वस्तुतः पाठभेदोऽयं प्रस्तुतस्थले सांख्यशब्दस्य यौगिकार्थनिर्णयं दुष्करतरं विदधाति। द्रष्टव्यम्—डॉ० आद्याप्रसादमिश्रः, सांख्यदर्शन की ऐतिहासिक परम्परा, इलाहाबाद, १९६७, पृ० ५।

४. महाभारतम्, शान्तिपर्व, ३०८।८२।

किन्तु 'सांख्यं प्रकुरुते' इत्यादिश्लोकस्योत्तरार्धस्थितेन 'तत्त्वानि च चतुर्विंशत्' इत्यनेन पूर्वार्धगतं 'प्रचक्षते' इति क्रियापदं संगमय्य चतुर्विंशतितत्त्वप्रख्यापनात् सांख्यास्तथा प्रकीर्तिता इति तात्पर्यपर्यवसानेन तत्रापि परिगणनरूपस्यार्थस्य न सम्यक् तिरस्कारः सम्भवति। अतो महाभारतकर्तुर्मतेन सांख्यशब्देन ज्ञानं परिगणनमित्युभयमेव ग्रहणीयमिति विश्वसिमः, येन

'सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते।'[1]

इत्यादि पुराणवचनमपि सर्वथा संगच्छेत। श्रीमद्भागवतपुराणे सांख्यप्रवक्ता भगवदवतारः कपिलर्षिस्तत्त्वसंख्यातृत्वेनोक्तः[2]। 'तत्त्वसंख्याता' इत्यस्य व्याख्यावसरे श्रीधरस्वामिपादास्त्वाहुः—'तत्त्वानां संख्याता गणकः······' इति। यद्यपि पण्डितश्रीमदुदयवीरशास्त्रिमहाशयास्तदर्थं श्रीधरस्वामिपादानाक्षिपन्ति तथापि अत्र स्वामिपादाः श्रीमद्भागवतकर्तुराशयं नातिवर्तन्त इति प्रतिभाति। श्रीमद्भागवतकाराणां मतेन सांख्यं तत्त्वाम्नायपरम्।[3] आम्नायपदस्य एकैकशः परिगणनार्थस्वीकारे न कापि हानिः प्रसिद्धिपरित्यागो वा, 'अइउण्' इत्यादि वर्णक्रमोपदेशपरस्य शिवसूत्रजालस्य पाणिनीयनये वर्णसमाम्नायशब्देन प्रसिद्धेः। पुनश्च 'संख्याता गणकः' इति पर्यायकथनस्य पुष्टिः श्रीमद्भागवतादपि सुष्ठु सम्भवति। तत्र तृतीयस्कन्धे षड्विंशाध्याये—

'यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्॥ १०॥

पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः॥ ११॥

महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे॥ १२॥

इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः।
वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते॥ १३॥

---

१. मत्स्यपुराणम्, ३।२९ ( गुरुमण्डलग्रन्थमाला, कलिकाता १९५४ )।

२. श्रीमद्भागवतम्, ३।२५।१।

३. विदितार्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाभिजातः।
तत्त्वाम्नायं यत्प्रवदन्ति सांख्यं प्रोवाच वै भक्तिवितानयोगम्॥—तत्रैव, ३।२५।३१।



मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम्।
चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया'॥ १४॥

इत्येतेषु श्लोकेषु सुव्यक्तं संख्यावाचकैः शब्दैः सांख्योक्ततत्त्वानां परिगणनं कृत्वाऽनन्तरश्लोकेनाह—

'एतावानेव संख्यातो ब्रह्मणः सगुणस्य ह।
संनिवेशो मया प्रोक्तो यः कालः पञ्चविंशकः'॥ १५॥

अतः 'संख्याता' इत्यस्य 'गणकः' इत्ययमर्थो, मूलकाराणां सर्वथा सम्मत एव। अत एवेदं पर्यवस्यति—परिगणनार्थसंख्याशब्दात् सांख्यशब्दनिष्पत्तिर्भागवतकृतां सम्मता।

वस्तुतस्तु, कापिलतन्त्रे प्रकृतिपुरुषादिविचारार्हतत्त्वानां पूर्वमनिश्चितसंख्याकानामिदंप्रथमतया निश्चयेन परिगणनात् संख्याशब्दस्य मुख्यार्थमादाय तत्तन्त्रं सांख्यनाम्ना प्रसिद्धिं जगाम। तदनन्तरं सांख्यशास्त्रस्योत्कृष्टज्ञानप्रतिपादकत्वेन प्रसिद्धौ जातायमुपचारेण लक्षणया च सांख्यसंख्यादिशब्दा अपि तत्त्वज्ञानाद्यर्थेषु रूढिमभजन्तेति न काऽपि असङ्गतिः।

### सांख्यप्रवर्तकः

एतत्त्वस्माभिरालोचितपूर्वं यन्महर्षिः कपिल एव सांख्यप्रवर्तकतया श्रुतिस्मृतीहासेषूल्लिख्यते। महर्षेः कपिलस्य सांख्यप्रवर्तकत्वे भारतीय शास्त्रपरम्परासु कुत्रापि विप्रतिपत्तिर्नावलोक्यते। किन्तु श्रुत्यादिशास्त्राणामकुण्ठितमैकमत्यमपि नवीनेतिवृत्ततत्त्वपरिशीलिनां सन्तोषाय न सम्पद्यते, नोचेत् तादृशमैकमत्यञ्चेत् मुद्राऽभिलेखादि स्थूलप्रमाणान्तरेण समर्थ्येत। ईदृशीं प्रामाण्यबुद्धिं प्रातःस्मरणीयाः परमगुरुवर्या महामहोपाध्यायश्रीहरप्रसादशास्त्रिचरणाः[1] प्रस्तरीरप्रमाणशब्देनोपहसन्ति स्म। इदानीं तु वयं सांख्यस्य कपिलकर्तृत्वे सर्वशास्त्राणां सम्मतिं पर्यालोचयिष्यामः।

परमर्षेः कपिलस्य नामधेयमिदंप्रथमतया श्वेताश्वतरोपनिषद्येवोट्टङ्किमवलोक्यते। श्रूयते च तत्र—

'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येदिति।' इति।[2]

अनेन मन्त्रेण कपिलस्यादिविद्वत्त्वं ध्वन्यते यत् खलु उत्तरकाले पुराणेतिहासेषु बहुधा पल्लवितमवलोक्यते। कामं मन्त्रस्यास्य व्याख्यानावसरे श्रीभगवच्छङ्कराचा-

---

१. 'पाथुरे प्रमाण' इति वङ्गीयशब्दस्तत्रभवद्भिः प्रयुज्यते स्म।

२. ५।२।

र्यपादाः 'कपिलं कपिलकनकवर्णं·····हिरण्यगर्भम्' इत्यादिना कपिलस्य हिरण्यगर्भत्वं प्रतिपादयन्ति यदाधारेण कीथप्रभृतयश्च नवीना नायं मन्त्रः सांख्यप्रवर्तकं स्पष्टतयोल्लिखतीति संशेरते,[1] किन्त्वेतदपि न विस्मर्तव्यं यत्तत्रैव कपिलस्य ऋषिविशेषत्वं भाष्यकर्त्रा न निराकृतं प्रत्युत भङ्ग्यन्तरेण कपिलर्षेरेव हिरण्यगर्भत्वमनेकपुराणवचनोद्धारेण प्रतिपादितम्। सांख्यकर्तुः कपिलस्य हिरण्यगर्भेतिनामान्तरमपि बहुप्रसिद्धम्। यथा चोक्तं पाताञ्जलयोगदर्शनभास्वतीटीकाकर्त्रा हरिहरानन्दारण्यस्वामिपादेन[2]—'भगवतः कपिलस्यापि धर्मज्ञानादिनां सहजातत्वात् स श्रद्धावद्भिर्ऋषिभिर्हिरण्यगर्भाख्यया पूजित इति तस्यापि हिरण्यगर्भसंज्ञा···" इति। स्वामिपादस्य सिद्धान्तोऽयं सर्वथा महाभारतानुकूल एव। यथा च स्मर्यते—

'कपिलं प्राहुराचार्याः सांख्या निश्चितनिश्चयाः॥
हिरण्यगर्भो द्युतिमानेष यश्छन्दसि स्तुतः।'[3] इति

१. "The idea that in this verse we are to see the first mention of the founder of the Sāṁkhya as a real person is too fantastic to be seriously upheld though it is not at all unlikely."
—A. B. Keith, *The Sāṁkhya System,* Second edition, Calcutta 1949, p. 9.
किन्तु एतदप्यत्रावधेयं यत् कपिलस्यानैतिहासिकत्वकथनदोषेण पं० श्रीउदरवीरशास्त्रिमहाशयेन ( सांख्यदर्शन का इतिहास, पृ० २१ ) तथा तदनुसारिणा डॉ० आद्याप्रसादमिश्र-महाभागेन ( सांख्यदर्शन की ऐतिहासिक परम्परा, पृ० ५२ ) कीथमहोदयस्योपरि यावानाक्षेपः कृतः कीथमहोदयस्तु न तस्य भाजनमिति मन्यामहे। वस्तुतः कीथमहोदयः शांकरभाष्यस्थव्याख्यानद्वयस्यैवाधारेण संशयानः पुनरपि अनुपदमेव मन्त्रेऽस्मिन् सांख्यप्रवर्तककपिलर्षेरुल्लेखस्य सम्भावनामपि अङ्गीकुर्वन्ति—
"......though it is not unlikely that the origin of the doctrine of Kapila as the founder of Sāṁkhya is to be traced to this passage."

२. साङ्गं योगदर्शनम्, काशीसंस्कृतसीरिजपुस्तकमाला ११०, वाराणसी १९३५, पृ० १।

३. महाभारतम्, पुण्यपत्तनस्थ-भण्डारकर-प्राच्यविद्यासंशोधनमन्दिरेण प्रकाशितम्, शान्तिपर्व, ३३०।३०-३१।



अथवा,

'सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः॥'[1] इति च।

वस्तुतस्तु सांख्यप्रवर्तकस्येदं हिरण्यगर्भेतिनामान्तरं बहोः कालात्परमपि परम्परया स्मर्यते स्म। येन सांख्यमतप्रतिपादिकाया ईश्वरकृष्णकृतायाः सांख्यकारिकायाः 'हिरण्यसप्ततिः' सुवर्णसप्तति,[2] 'कनकसप्ततिः' इत्येवमादीनि नामानि अभूवन्।[3] अस्तु प्रकृतमिदानीमनुसरामः।

कपिलस्य सांख्यसिद्धान्तप्रवर्तकत्वे महाभारतीयं प्रमाणमस्माभिरुपन्यस्तपूर्वम्, तन्निरासकं च किमप्यन्यद्गरीयः प्रमाणान्तरं न वयं पश्यामः। श्रीमद्भागवतेऽपि महर्षिकपिल एव सांख्यप्रवक्तृत्वेनोक्तः। गरुडपुराणे सिद्धेशेन कपिलेनासुरये सांख्योपदेशः स्मर्यते। तत्र तु कपिलस्य विष्ण्ववतारत्वमपि वर्णितम्।[4] तथैव [5]मत्स्य-स्कन्द-विष्णुपुराणादिष्वपि कपिलस्य सांख्यकर्तृत्वं बहुधा प्रपञ्चितम्।

न केवलं पुराणेतिहासादिष्वेव स्मर्यते अपि तु सर्व एव सांख्यशास्त्रीयग्रन्थकर्तारो विविधसांख्यशास्त्रीयग्रन्थानां टीकाकर्तारोऽपि शास्त्रप्रवर्तकत्वेन महर्षिकपिलमेव ऐकमत्येन स्मरन्ति। सांख्यप्रवचनसूत्रसांख्यतत्त्वसमाससूत्राख्यग्रन्थद्वितयस्य प्राचीनत्वे यद्यपि नवीनानां विप्रतिपत्तिर्दृश्यते ( विषयमिममग्रे विमर्शयिष्यामः ) किन्तु ईश्वरकृष्णकृतकारिकाग्रन्थानां प्राचीनत्वे न संशीतिलेशतोऽपि वर्तते। स तु सांख्यकारिकाकारः श्रीमदीश्वरकृष्णाचार्यः सांख्यशास्त्रस्य आद्याचार्यं भक्तिवशात् प्रख्यातत्वाच्च न नाम्ना किन्तु मुनिपरमर्षिशब्दाभ्यां स्म-

१. तत्रैव, ३३७।६०।

२. निघण्टौ 'हिरण्यं' 'कनकं' 'काञ्चनम्' इत्येवमादीनि पर्यायतया पठितानि ( १।२ )।

३. सांख्यकारिकायाः परमार्थनाम्ना बौद्धभिक्षुणा चीनभाषायामनूदितायां टीकायां मूलकारिकाभागस्य 'सुवर्णसप्ततिशास्त्रम्' इति नामधेयमवलोक्यते। द्रष्टव्यम्—N. Aiyaswami, *Sāṃkhya Kārikā Saptati af Īśvarakṛṣṇa with a Commentary reconstructed into Sanskrit from the Chinese Translation of Paramārtha,* Tirupati 1944.

४. पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्॥—गरुडपुराणम्, १।१।१८।

५. सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते। ३।२९।
सांख्याचार्यो हि मतिमान् कपिलो ब्राह्मणो वरः। १७०।४।

रति[1]। किन्तु तस्य मुनिपरमर्षिशब्दाभ्यां कपिल एवाभिप्रेत इत्यत्र तु सर्वेषां तदीयटीकाकर्तॄणामैकमत्यम् ।[2] अतः कपिलस्य महर्षेः सांख्यप्रवर्तकत्वं सर्वथा भारतीयपरम्परासिद्धम्, अकारणं संशयानैः पाश्चात्यविद्वद्भिस्तदनुगामिभिर्वा एतद्देशीयपण्डितैर्न सहसा निराकर्तुं शक्यम् ।

### महर्षेः कपिलस्य जन्मभूर्निवासश्च ।

भारतभूखण्डस्य कतमं प्रदेशं तत्रभवान् स्वजनुषाऽलञ्चकारेत्यत्रापि विदुषां नैकमत्यमवलोक्यते। परन्तु तद्विषयकवृत्तानां प्राचीनपरम्परासु आधारितत्वात् तद्विषये क्वचित् क्वचिद् भूयांसः प्रमादा अपि समुत्पद्यन्ते यैः खलु प्राचीन-टीकाकर्तारोऽन्तराऽन्तरा विमोह्यन्त एव। पुराणेतिहासेषु विधृतानां वृत्तान्तानाम् आपातार्थपर्यालोचनया प्रतीयमानं कपिलत्रैविध्यमपि तादृशमेकं प्रमादस्थलम् । सांख्यकारिकाभाष्यकर्त्रा गौडपादाचार्येण सांख्यप्रवर्तको महर्षिः कपिलः ब्रह्मणः पुत्रत्वेन स्मृतः।[3] भाष्यकर्तुरिदमवधारणं तु न स्वकपोलकल्पितं परन्तु किञ्चित्

---

१. पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।—कारिका ६९ ।
एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया ददौ ।—कारिका ७० ।

२. ( क ) "परमर्षिणा श्रीकपिलर्षिणा" इति गौडपादः। तथा च 'सांख्यं कपिलमुनिना प्रोक्तं संसारविमुक्तिकारणं हि । यत्रैताः सप्ततिरार्या भाष्यं चात्र गौडपादकृतम् ॥' इति तदीयभाष्यसमाप्तिश्लोकः ।

( ख ) "परमर्षिणा कपिलेन···मुनिः कपिलः" इति वाचस्पतिमिश्रः। तथा च पुनर्योग-सूत्रीयव्यासभाष्यगतस्य 'आदिविद्वान्निर्माणचित्तमधिष्ठाय' (१।२५) इत्यादिसन्दर्भस्य व्याख्यानावसरे मिश्रपादस्त्वाह—'पञ्चशिखाचार्येण आदिविद्वान् कपिल इति ।··· कपिलो नाम विष्णोरवतारविशेषः प्रसिद्धः । स्वयंभूर्हिरण्यगर्भः । तस्यापि सांख्य-योगप्राप्तिर्वेदे श्रूयते । स एवेश्वर आदिविद्वान् कपिलो विष्णुः स्वयम्भूरिति भावः ।'

( ग ) 'मुनिर्भगवान् कपिलः······' इति माठरवृत्तिः ।

( घ ) "······परमर्षिर्भगवान् सांसिद्धिकैर्धर्मज्ञानवैराग्यैश्वर्यैराविष्टपिण्डो विश्वाग्रजः कपिलमुनिः । तेन कपिलमुनिना समाख्यातम् ।···"—इति युक्तिदीपिका ।

( ङ ) "परमर्षिणा समाख्यातमिति कपिलमहर्षिणा यथाक्रममाख्यातम् ।···मुनिरनु-कम्पया प्राहेति···यदुत कपिलमहर्षिः··· ।"—अज्ञातकर्तृकटीकायाः परमार्थकृत-चीनभाषानुवादतोऽय्यास्वामिकर्तृकं पुनः संस्कृतरूपान्तरम् , पृ० ९७ ।

३. 'इह भगवान् ब्रह्मसुतः कपिलो नाम । तद् यथा—
सनकश्च सनन्दश्च तृतीयश्च सनातनः । आसुरिः कपिलश्चैव वोढुः पञ्चशिखस्तथा ।
इत्येते ब्रह्मणः पुत्राः सप्त प्रोक्ता महर्षयः ॥' इति ।



पुराणवचनमाधारीकृत्यैव प्रवृत्तमिति अनुमीयते। वस्तुतस्तु केनचित् नवीना-लोचकमहोदयेन अध उपन्यस्तं वचनमिदं पुराणवचनत्वेनैवाङ्गीकृतम् ।[1] अतः, ब्रह्मसुतः ( पाठान्तरानुसारं ब्रह्मणो मानसपुत्रो वा ) कश्चित् कपिलः, स हि गौडपादाचार्यस्य मतेन सांख्यप्रवर्तक इत्येकः पक्षः ।

स्वायम्भुवस्य मनोर्देवहूतिरिति अन्यतमा दुहिता। प्रजापतिः कर्दमस्ता-मुपयेमे । तस्मान्महर्षेः कर्दमात् देवहूत्यां भगवान् विष्णुः कपिलरूपेणावततारेति श्रीमद्भागवतीया वार्ता ।[2] तस्य भगवदवतारभूतस्य कपिलस्य सांख्यप्रवर्तकत्वमपि तत्रैव श्रीमद्भागवते कीर्तितम् ।[3] अतः, भगवतो विष्णोरवतारभूतः कर्दमदेवहूत्योः पुत्रत्वेनावतीर्णः महर्षिः कपिलः, स एव श्रीमद्भागवतानुसारं सांख्यप्रवर्तक इत्ययं द्वितीयः पक्षः ।

पुनस्तु कपिलर्षेरग्न्यवतारत्वमपि स्मर्यते ।

महाभारते कपिलस्याग्नित्वमुक्तं ( न स्पष्टतया अग्न्यवतारत्वम् ) यथा—
"कपिलं परमर्षिं च यं प्राहुर्यतयः सदा । अग्निः स कपिलो नाम सांख्ययोगप्रवर्तकः ॥'[4]

कपिलस्याग्नित्वं पुराणान्तरेऽपि स्मर्यत एव। किन्तु स कपिलः सांख्यप्रवर्तक-कपिलर्षेरभिन्नो न वेति न निश्चयेन वक्तुं पारयामः।[5]

---

१. तन्मते तु श्लोकस्यास्यान्तिमचरणे 'सप्तैते मानसाः पुत्रा ब्रह्मणः परमेष्ठिनः' इति पाठः । सनकादिमानसपुत्रैः साकमुल्लिखितत्वादेतन्मते कपिलस्यापि ब्रह्मणो मानसपुत्रत्वकथनं समीचीनमेव प्रतिभाति ।

२. 'तस्यां बहुतिथे काले भगवान्मधुसूदनः । कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥ ६ ॥
अयं सिद्धगणाधीशः सांख्याचार्यैः सुसम्मतः । लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः ॥' १९॥
—श्रीमद्भागवतम् , ३।२४।

३. 'एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात् ।
प्रसंख्यानाय तत्त्वानां सम्मतायात्मदर्शने ॥ ३६ ॥'—तत्रैव ।
'कपिलस्तत्त्वसंख्याता भगवानात्ममायया ।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥'—तत्रैव, ३।२५।१ ।
कपिलस्य विष्ण्ववतारत्वं वाल्मीकेरपि सम्मतमित्यस्माभिः प्रतिपादितपूर्वम् ( दशमं मपुटमवलोकनीयम् )। किन्तु वाल्मीकिरामायणे तस्य महर्षेः सांख्यकर्तृत्वं नोल्लिखितम् ।

४. वनपर्व, २११।२१। भण्डारकरप्राच्यविद्यासंशोधनमन्दिरेण प्रकाशितं संस्करणम् ।

५. 'आदित्यसंज्ञः कपिलस्त्वग्रजोऽग्निरिति स्मृतः ।
हिरण्मयस्य गर्भोऽभूद्धिरण्यस्यापि गर्भजः ॥'—वायुपुराणम् , १।५।४५

अतः, अग्नेरवतारभूतः परमर्षिः कपिलः सांख्ययोगप्रवर्तकः इति महाभारतीया वार्तेति तृतीयः पक्षः।

अनेनापाततः प्रतीयमानेन कपिलत्रैविध्येन न केवलं वयं प्राचीना मनीषिणः सांख्यतत्त्ववेत्तारष्टीकाकारा अपि किंकर्तव्यविमूढा इव दिक्सम्मूढाः कान्दिशिकत्वमापन्नाः। अतः तत्त्वसमाससूत्रस्य सर्वोपकारिणीवृत्तिकृता इत्थमभ्यधायि[1]—

'अथात्रानादिक्लेशकर्मवासनासमुद्रनिपतितानाथदीनानुद्दिधीर्षुः परमकृपालुः स्वतःसिद्धतत्त्वज्ञानो महर्षिर्भगवान् कपिलो द्वाविंशतिसूत्राण्युपादिक्षत्। सूचनात् सूत्रमिति हि व्युत्पत्तिः। तत एतैः समस्ततत्त्वानां सकलषष्टितन्त्रार्थानां च सूचनं भवति इतश्चेदं सकलसांख्यतीर्थमूलभूतं तीर्थान्तराणि चैतत्प्रपञ्चभूतान्येव। सूत्रषडध्यायी तु वैश्वानरावतारमहर्षिभगवत्कपिलप्रणीता। इयं तु द्वाविंशतिसूत्री तस्या अपि बीजभूता नारायणावतारमहर्षिभगवत्कपिलप्रणीतेति वृद्धाः।'

अतः स्पष्टतया सर्वोपकारिणीवृत्तिकृतो मतेन कपिलद्वैविध्यम्। एकेन कपिलेन द्वाविंशतिसूत्रात्मकं तत्त्वसमाससूत्रं विनिर्मितम् अपरेण तु तदाधारेणैव विस्तरेण सूत्रषडध्यायी प्रणीतेति। स तु वृत्तिकारो न खलु स्वबुद्ध्यैवमाह, अपि तु 'इति वृद्धाः' इत्युक्त्या तत्र पूर्वतनाचार्यसम्मतिमपि प्रदर्शयति। किन्तु सिद्धान्तोऽयं सर्वथा भ्रमविजृम्भित एव। त्रिधोल्लिखितस्यास्य कपिलस्यैकपुरुषत्वप्रतिपादनार्थं विद्वद्धौरेयेण श्रीमता उदयवीरशास्त्रिमहोदयेन भूरिः परिश्रमो विहितः। अस्मिन्विषये विस्तरस्तु तदीयकृतावेव द्रष्टव्यः।[2] समासत एतदेवात्र प्रतिपादयामो यत् महाभारतकर्तुर्मतेनापि सांख्यप्रवर्तकः कपिलो विष्णोरवतार एव[3] किन्तु स क्रोधाग्निना सगरपुत्रान् भस्मीचकारेति तस्याग्नित्वकल्पनं प्रसिद्धमभूदिति श्रीशास्त्रिमहोदयानां सिद्धान्तं सर्वथा शास्त्रोपपत्तिसम्मतमेव तर्कयामः। एतद्विषये सांख्यप्रवचनभाष्यकर्तुर्विज्ञानभिक्षोरुक्तिरपि सम्यगवधानमर्हति यत्र प्रागुक्तकपिलद्वैविध्यं प्रकामं निरस्तम्।[4]

स तु महर्षिः कपिलः सांख्यशास्त्रप्रवर्तकः कदा कुत्राविर्बभूव इत्यत्र विदुषां भूयान् मतभेदोऽस्ति। केषांचिद् विदुषां मतेन कपिलस्य ऐतिहासिकपुरुषत्वं नास्ति

१. प्रस्तुतसंस्करणस्य ५९ तमं पुटमवलोकनीयम्।

२. श्रीउदयवीरशास्त्री, सांख्यदर्शन का इतिहास, पृ० ८–१२।

३. तथ्यमेतत् महाभारतशान्तिपर्वणः ३३० तमाध्यायवर्तिषु २९–३१ संख्याकश्लोकेषु श्रीभगवदुक्तेः स्पष्टीभवति।

४. सांख्यप्रवचनभाष्यम्, ६।७०।



योगसूत्रीयव्यासभाष्ये (१।२५) 'आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाचेति' इत्युक्तेः। वचनमिदं पञ्चशिखाचार्यस्येति वाचस्पतिमिश्रस्य विमर्शः। किन्तु आसुरये सांख्यज्ञानोपदेशार्थं कपिलेन निर्माणचित्ताधिष्ठानस्येयं वार्ता न प्रमाणान्तरेण पुराणेतिहासादिगतेन समर्थ्यते। पुनस्तु 'निर्माणचित्तम्', 'निर्माणकायः' इत्यनयोर्महान् भेदोऽस्ति इति योगसूत्रभाष्यादिदर्शनादवगम्यते। विशेषतः निर्माणचित्ताधिष्ठानं पाञ्चभौतिकदेहेऽवतीर्णेन भगवदवतारेण अशक्यमित्यपि न सहसा प्रतिपादयितुं शक्यते। अतः कपिलर्षेरैतिहासिकपुरुषत्वे न किमपि संदेहास्पदं पश्यामः।[1]

'कपिलवस्तु'[2]–(पालिभाषायां कपिलवत्थु[3] इति)–नाम नगरं भगवतो गौतमबुद्धस्य जन्मस्थानतया बौद्धशास्त्रेषु प्रसिद्धम्। तदेव नगरं महर्षेः कपिलस्य जन्मभूर्वासभूर्वा इति जनरलकनिंघममहोदया आमनन्ति।[4] रिचार्ड-गार्वेमहोदया अपि तथैव मन्यन्ते। बौद्धधर्मः सांख्यदर्शनस्य महदाधमर्ण्यमादधातीति निश्चयेन गार्वेमहोदयः स्वकीयमनुमानं द्रढयितुमीहते। तन्मतेन तु 'कपिलवत्थु' इति पालिभाषाशब्दस्य 'कपिलवास्तु' इत्येव संस्कृतरूपान्तरम्, न तु 'कपिलवस्तु' इति। डॉ० आद्याप्रसादमिश्रस्तु गार्वेपण्डितमतमसहमानः कपिलवस्तुनाम्ना कपिलनाम्नः ऋषेः सम्पर्केऽपि संदेग्धि, 'कपिल' इति तु शाक्यक्षत्रियाणां कस्यचित् शूरस्य पूर्वजस्य नाम स्यादिति वदन्।[5]

किन्तु मिश्रमहोदयस्य मतमिदमविचारितं बौद्धग्रन्थपरिचयाभावजन्यं च मन्यामहे। कथमिति चेद् ब्रूमः—इक्ष्वाकुवंशोद्भूतानां क्षत्रियाणां (अनन्तरं शाक्यनाम्ना प्रसिद्धिं गतानाम्) तस्मिन् प्रदेशे वासार्थमागमनसमये तत्र कपिलनामा ऋषिरासीत् तन्निर्देशेनैव तैस्तत्र नगरं निर्माय वासः कल्पित इत्यत्र

१. Ram Chandra Pandeya (ed.), *Yuktidīpikā*, Delhi 1967, Introduction, pp. xxii ff; श्रीउदयवीरशास्त्री, सांख्यदर्शन का इतिहास, पृ० २२ तथा अग्रे। डॉ० आद्याप्रसादमिश्र, सांख्यदर्शन की ऐतिहासिक परम्परा, इलाहाबाद १९६७, पृ० ५३ तथा अग्रे।

२. दिव्यावदानम्, पृ० ४१, २४९।

३. "……इदं चेत्थ कपिलवत्थुकं नाम नगरं, तत्थ मया निब्बत्तितब्बन्ति निट्ठं अगमासि।"—जातकत्थवण्णना (फ़ज़बोलसम्पादिता), १।४९।

४. The Ancient Geography of India.

५. सांख्यदर्शन की ऐतिहासिक परम्परा, पृ० ६१।

पालिसंस्कृतेत्युभयग्रन्थानां पूर्णतया संवादोऽवलोक्यते। यथा चोक्तं परमत्थ-जोतिकानाम्न्यां सुत्तनिपातट्ठकथायाम् ( १।३५३ )—

'तत्थ नगरमापनोकासं परियेसमाना, हिमवति कपिलो नाम घोरतपो तापसो पटिवसति पोक्खरिणीतीरे महासाकसण्डे—तस्स वसनोकासं गता। सो ते दिस्वा पुच्छित्वा सब्बं पवत्तिं सुत्वा तेसु अनुकम्पं अकासि। सो किर भूम्मजालं नाम विज्जं जानाति, याय असीतिहत्थे आकासे च हेट्ठा भूमियञ्च गुणदोसे पस्सति। अथेकस्मिं पदेसे सुकरमिगा सिहब्यग्घादयो तासेत्वा परिपातेन्ति, मण्डुकमूसिका सप्पे भिंसापेन्ति; सो ते दिस्वा 'अयं भूमिप्पदेसो पुथुविअग्ग'न्ति तस्मिं पदेसे अस्समं मापेसि। ततो सो राजकुमारे आह—'स चे मम नामेन नगरं करोथ, देमि वो इमं ओकास'न्ति। ते तथा पटिजानिंसु। तापसो 'इमस्मिं ओकासे ठत्वा चण्डालपुत्तो पि चक्कवत्तिं बलेन अतिसेती'ति वत्वा 'अस्समे घरं मामेत्वा नगरं मापेथा' ति तं ओकासं दत्वा सयं अविदूरे पब्बतपादे अस्समं कत्वा वसि। ततो कुमारा तत्थ नगरं मापेत्वा कपिलस्स वुत्थोकासे कतत्ता कपिलवत्थुन्ति नामं आरोपेत्वा तत्थ निवासं कप्पेसुं।' बुद्धचरितादिनिर्माता महाकविः बौद्धदार्श-निकानां मूर्धन्यभूतो भदन्ताश्वघोषोऽपि अट्ठकथाकर्तुः बहोः कालात् प्रागेव इममर्थं विस्तरेण वर्णयामास स्वकीये सौन्दरनन्दे महाकाव्ये। स तु कपिलनाम-ग्रहणेनैव काव्यारम्भं विधाय कपिलवास्तुनगरनामकरणमित्थमभ्यधात्—

'कपिलस्य च तस्यर्षेस्तस्मिन्नाश्रमवास्तुनि।
यस्मात्ते तत् पुरञ्चक्रुस्तस्मात् कपिलवास्तु तत्॥'[१]

इदमप्यत्रावधेयं यत्, नगरस्य नामविषयेऽपि गार्वेमहोदयस्यानुमानमश्वघो-षेण समर्थ्यत एव। यद्यपि दिव्यावदानादिमिश्रसंस्कृतग्रन्थेषु 'कपिलवस्तु' इति नामावलोक्यते तथापि भदन्ताश्वघोषः 'कपिलवास्तु' इत्येवं लिलेख। तदेव नगरस्यास्य शुद्धं संस्कृतं नामेति अनुमातुं शक्यते। अतः कस्यचिदृषेः नाम्नैव 'कपिलवास्तु' इति नामाभूत् इति सम्यक् प्रतिपादितम्। स एव कपिलः सांख्यशास्त्रप्रवर्तक इत्यत्र न किमपि बाधकं पश्यामः। सत्यमेतत्—श्रीमद्भागवतादि-शास्त्राणां प्रामाण्यात्[२] सरस्वत्या नद्यास्तीरे बिन्दुसरःसमीपवर्तिनि कस्मिंश्चि-दाश्रमपदे महर्षिः कपिलः कर्दमदेवहूत्योः पुत्ररूपेण जनिमलभत। महाभारत-रामायणादीन् आर्षग्रन्थान् विलोड्य तदाश्रमस्थाननिर्देशार्थं पं० श्रीमता उदयवीर-

१. सौन्दरनन्दकाव्यम्, १।५७।

२. द्रष्टव्यम्—श्रीमद्भागवतम्, ३।२१।६, ३।२१।३३, ३।२४।९।



शास्त्रिमहाभागेन डॉ० आद्याप्रसादमिश्रेण च भूयान् श्रमो विहितः।[१] तदनुसारेण कपिलर्षेर्जन्मस्थानं हिमालयमध्ये इदानीं मानससरोवरनाम्ना प्रसिद्धात् सरोवरात् पश्चिमायां दिशि कुत्रचिदासीदिति सुनिरूपितं भवति। न तत्रास्ति अस्माकं काऽपि विप्रतिपत्तिः। किन्तु तेन निरूपणेन कपिलवास्तुनगरस्य कपिलसम्पर्को न निराक्रियत इति तर्कयामः। प्रागुल्लिखितेषु बौद्धग्रन्थसन्दर्भेषु कुत्रापि कपिल-वास्तुनगरं कपिलस्य जन्मस्थानमासीदिति नोल्लिखितम्। अतः बिन्दुसरःसमीप-वर्तिनि आश्रमे जनिमासाद्यापि महर्षिः कियन्तं कालं कपिलवास्तुसन्निहिते प्रदेशे आश्रमं निर्मायोवासेत्यत्र न किमप्यसामञ्जस्यम्। बौद्धमतप्रादुर्भावक्षेत्रे सांख्य-दर्शनस्य महीयान् प्रभाव आसीत्[२] इति गार्वेकृतस्यानुमानस्य निरसनार्थं कीथमहोदयेन[३] यदुक्तं तन्नोपपत्तिसहं मन्यामहे। कीथमहोदयस्तु बौद्धधर्मस्य सांख्याधमर्ण्यं निराकर्तुं प्रयतते उभयोरेव समानतया उपनिषन्मूलत्वं प्रतिपादयन्। किन्तु वस्तुस्थितेस्तथात्वेऽपि भारतवर्षस्य पूर्वप्रान्ते बुद्धसमये सांख्यप्रचार-सम्भावना न निरस्यते। गौतमबुद्धस्य गुरूणामन्यतमः कालायसगोत्रीयोऽ-राडनामा कश्चित्तपस्वी आसीत्। गौतमो गृहात् अभिनिष्क्रम्य प्रथममेव धर्मलाभा-र्थमराडस्याश्रममगमदिति अश्वघोषकृतबुद्धचरितावलोकनात् ज्ञायते।[४] न केवलं सोऽराडाश्रमं गतवानेव अपि तं गुरुवत् सम्मान्य तस्मिन्नात्मानं समर्प्य दुःखपरित्रा-णोपायमपि प्रार्थयामास, सोऽपि महात्मा तं यथावदुपदिदेश।[५] अयमराडः

१. पं० श्रीउदयवीरशास्त्री, सांख्यदर्शन का इतिहास, पृ० ४७–६९। डॉ० आद्याप्रसादमिश्र, सांख्यदर्शन की ऐतिहासिक परम्परा, पृ० ५९–६०

२. 'At any rate, if we are allowed to assume that Sankhya System was regarded as authoritative at Kapilavastu and its environs, this explains most naturally why the founder of Buddhism who was born there, relied on that system'

३. A. B. Keith, *The Sāmkhya System,* p. 61.

४. 'ततः शमविहारस्य मुनेरिक्ष्वाकुचन्द्रमाः। अराडस्याश्रमं भेजे वपुषा पूरयन्निव॥'
—बुद्धचरितम्, १२।१।

५. 'इति वाक्यमराडस्य विज्ञाय स नरर्षभः। बभूव परमप्रीतः प्रोवाचोत्तरमेव च॥
दिदृक्षुरिव हि ज्योतिर्यियासुरिव दैशिकम् त्वद्दर्शनमहं मन्ये तितीर्षुरिव च प्लवम्॥
तस्मादर्हसि तद्वक्तुं वक्तव्यं यदि मन्यसे। जरामरणरोगेभ्यो यथायं परिमुच्यते॥
इत्यराडः कुमारस्य माहात्म्यादेव चोदितः। संक्षिप्तं कथयाञ्चक्रे स्वस्य शास्त्रस्य निश्चयम्॥
—तत्रैव. ११, १३–१४।

कपिलमतानुसारी आसीदिति श्रीमदश्वघोषो विस्पष्टाभिरुक्तिभिः प्रकट्यकरोत्।[१]

अराडेनोपदिष्टः सिद्धान्तोऽपि सांख्यानुसारी आसीत्, तदुपदेशे सांख्यीय-पारिभाषिकशब्दानां बाहुल्यमेव सविशेषमवधानमर्हति।[२] यद्यपि केनचिद् बौद्धाचार्येण विवृतत्वात् बुद्धचरित उपन्यस्तेऽराडसिद्धान्ते अधुना प्रसिद्धात् सांख्यसिद्धान्तात् स्तोकाद्भेदोऽप्यवलोक्यते तथापि तस्य सांख्यसिद्धान्तत्वे इदानीन्तनानां केषांचिद् बौद्धशास्त्राभिज्ञानां संशयो नो विस्मयमेव समुत्पादयति।[३] अश्वघोषकथिते बुद्धस्य अराडशिष्यत्वेऽपि किमपि संदेहकारणं न वयं पश्यामः, स्वकालीनबौद्धविद्वत्समाजे प्रमाणकोटिकपरम्परामन्तरेण अश्वघोषसदृशो बौद्धाचार्यः कदापि इत्थं नालिखिष्यत्। अतः तद्वचःप्रामाण्ये कीथमहोदयस्य संशीतिरपि निर्मूलैव।[४] किन्तु अराडगौतम-वृत्तान्तो न केवलं भदन्ताश्वघोषेणैव इदंप्रथमतया वर्णितः, अपि तु स्थविरवादिशास्त्रेऽपि एतद्विषये किमपि प्रमाणमुपलभ्यत एव। तत्र तु अराडस्य 'आळारकालाम' इति नामधेयम्। मज्झिमनिकायगत-वृत्तान्तात् यद्यपि आळारस्य सिद्धान्तविषये न स्पष्टतया किमपि निश्चेतुं शक्यते तथाऽपि अयं कश्चित्सांख्ययोगाचार्य आसीदित्यनुमानं निर्विवादमेव।[५] अतः, बुद्धप्रादुर्भावकाले कपिलवास्तुसन्निहितप्रदेशे सांख्यदर्शनस्य भूयान् प्रचार आसीदित्यत्र न लेशतोऽपि संशीतिः।

इत्थं कपिलवास्तुसन्निकर्षे कियन्तं कालं कपिलस्थितौ सिद्धायामपि स परमर्षिः आ शरीरान्तात् तत्रैवोवासेत्यत्रापि न विश्वसिमः। कपिलेन सगर-राजस्य षष्टिसहस्रं पुत्राः भस्मसात् कृता इति रामायणमहाभारताभ्यां ज्ञायते। सगर-पुत्राणां कपिलेन भस्मीकरणं कुत्र संवृत्तमिति जिज्ञासायां रामायण-महाभारत[६]-गत

'अथ मोक्षवादिनमराडमुपशममतिं तथोट्टङ्कम्।
तत्त्वकृतमतिरुपास्य जहावयमप्यमार्गं इति मार्गकोविदः॥'—सौन्दरनन्दकाव्यम्, ३।३।

१. 'सशिष्यः कपिलश्चेह प्रतिबुद्ध इति स्मृतः।'—तत्रैव, ११।२१।

२. यथा—'तत्र तु प्रकृतिं नाम विद्धि प्रकृतिकोविद।
पञ्चभूतान्यहंकारं बुद्धिमव्यक्तमेव च॥'—तत्रैव, ११।१८।

३. द्रष्टव्यम्—G.P. Malalasekera, *Dictionary of Pāli Proper Names*, Vol. I., p. 296.

४. A. B. Keith, *The Sāmkhya System*, p. 27.

५. मज्झिमनिकाय, १।११२, २९५।

६. 'श्रुत्वा तु वचनं तेषां कपिलो रघुनन्दन॥



एव वृत्तान्तः सूक्ष्मदृशा पर्यालोचनीयः। सगरपुत्रैः स्वपितुर्यज्ञीयाश्वमिन्द्रेणापहृत-मन्विच्छद्भिः महताऽऽटोपेन भूदारणं समारब्धम्। तेन समुद्रो भूयोऽपि विस्तार-मगमदित्यपि ऐतिहासिकी वार्ता। अतस्तदानीन्तनः कपिलाश्रमः समुद्रकूले एव कुत्रचित् अनुसन्धेयः स्यात्।[१] पुनरपि भस्मीभूतानां सगरात्मजानामुद्धारार्थं सगरवंशीयेन भगीरथेन स्वतपोबलेन भगवती भागीरथी धरातलं समानीता।[२] भगीरथेन समानीता गङ्गा सगरपुत्राणाम् उद्धारं विधाय तत्रैव समुद्रं प्रविवेश इति कल्पयितुं युज्यते। गङ्गायाः सागरप्रवेशस्तु कपिलाश्रमसन्निधौ यत्र सगरपुत्राः भस्मीभूता अपतन् तत्रैव जात इत्यपि सङ्गच्छते। अतः गङ्गासागरसङ्गमे कपिलमुनिराश्रमं निर्मायोवास इति नैतिह्यविरुद्धम्। गङ्गासागरसङ्गमस्तु इदानीं वङ्गप्रान्ते कलिकातानगर्याश्चत्वारिंशति क्रोशेषु दृश्यते, तत्राद्यापि कपिलस्याश्रमस्थलं निर्दिश्यते च, यत्र प्रतिवर्षं मकरसंक्रान्तिदिवसे पुण्यस्नानार्थिनां महान् समावेशोऽपि भवति।

अत एवात्रायं निष्कर्षः—महर्षिः कपिलः हिमवत्प्रदेशवर्तिनि बिन्दुसरःसन्निकर्षे जन्म लब्ध्वा कपिलवास्तुसमीपे कञ्चित्कालमुषित्वाऽन्ते गङ्गासागर-सङ्गमवर्तिनि आश्रमे उवास।

## महर्षेः कपिलस्याविर्भावसमयः

सांख्यकारस्य कपिलस्य महर्षेः निश्चयेन कालनिरूपणं न किमपि सुकरं कर्म तस्य उपनिषन्महाभारतादिकालापेक्षितत्वात्, तेषामपि कालविषयेऽद्यापि इतिवृत्त-तत्त्वविदामन्योन्यं भृशं मतानैक्याच्च। डॉ० आद्याप्रसादमिश्रमहोदयेन स्वनिबन्धे[३] सुष्ठु निरूपितं यत् शतपथब्राह्मणसंकलनादपि पूर्वं महर्षिः कपिल आविर्बभूव। मतमिदं महाभारतभागवतादिग्रन्थदर्शनादपि सत्यतयैव प्रतिभाति। अतः कपिलाविर्भावकालो न्यूनतया पञ्चसहस्रवर्षेभ्यः पूर्वमेवासीत्, न कथमपि तस्मादर्वाचीन इति तु निश्चप्रचमेव।

रोषेण महताविष्टो हुंकारमकरोत्तदा। ततस्तेनाप्रमेयेण कपिलेन महात्मना॥
भस्मराशीकृताः सर्वे काकुत्स्थाः सगरात्मजाः॥—वा० रा०, बालकाण्ड०, ४०।२९–३१।
ततः क्रुद्धो महाराज कपिलो मुनिसत्तमः। वासुदेवेति यं प्राहुः कपिलं मुनिसत्तमम्॥
स चक्षुर्विवृतं कृत्वा तेजस्तेषु समुत्सृजत्। ददाह सुमहातेजा मन्दबुद्धीन् स सागरान्॥
—महाभारतम्, वनपर्व, १०६।२–३।

१. महाभारतम्, वनपर्व, १०५।२३–२४

२. वाल्मीकिरामायणम्, बालकाण्डम्, ४३।४०-४४।३; महाभारतम्, वनपर्व, १०८।१५-१९।

३. पूर्वोल्लिखितो ग्रन्थः, पृ० ६८–७१।

## महर्षेः कपिलस्य कृतिः

ऋषिकृतानि दर्शनशास्त्राणि सूत्रात्मकान्येवावलोक्यन्ते । यथा—वैशेषिकसूत्राणि कणादकृतानि, न्यायसूत्राणि गौतमकृतानि, ब्रह्मसूत्राणि बादरायणकृतानि, मीमांसासूत्राणि जैमिनिकृतानि, योगसूत्राणि पतञ्जलिकृतानि । अतः सांख्यदर्शनेनापि सूत्ररूपेण भाव्यमिति विदुषामनुमानं सर्वथा समीचीनमेव। वर्तेते च द्वौ सांख्यग्रन्थौ सूत्रषडध्यायी, तत्त्वसमासश्च पञ्चविंशतिसूत्रात्मकः ।[1] किन्तूभयोरप्येतयोरर्वाचीनत्वमामनन्ति इदान्तीन्तना विद्वांसः। मन्यन्ते च ईश्वरकृष्णकृतां सांख्यकारिकामेव अद्यत्वे उपलभ्यमानेषु सांख्यग्रन्थेषु प्राचीनतमाम्। तत्रायं हेतुः—सर्वेषामेव ऋषिकृतानां सूत्रनिबद्धदर्शनग्रन्थानामुपरि प्राचीनभाष्यटीकाग्रन्था विद्यन्ते किन्तु प्रागुक्तयोः सूत्रात्मकसांख्यग्रन्थयोरुपरि न दृश्यते एकमपि सुप्राचीनं भाष्यं न वा वाचस्पतिमिश्रादिप्राचीनमनीषिप्रणीता काऽपि टीका। गौडपादाचार्येण कारिकाग्रन्थस्योपरि भाष्यं निर्मितं, निरमायि च वाचस्पतिमिश्रेण तस्यैव सांख्यतत्त्वकौमुदीनाम्नी पेशला टीका। न केवलमेतावदपि, एतस्यैव कारिकाग्रन्थस्य काचन प्राचीना टीकाऽऽसीत् या खलु क्रिस्तीयषष्ठशताब्द्याः पश्चिमे भागे परमार्थनाम्ना उज्जयिनीवास्तव्येन बौद्धभिक्षुणा चीनभाषान्तरमारोपिताऽभूत्। ईश्वरकृष्णस्य तथाऽन्येषां प्राचीनानां ग्रन्थकर्तॄणां ग्रन्थेभ्योऽपि सूत्रषडध्याय्याः कोऽपि परिचयो न लभ्यते किं बहुना भगवता शङ्कराचार्येण स्वकृते शारीरकभाष्ये सांख्यमतखण्डनावसरे सांख्यकारिकैवोद्ध्रियते, न षडध्यायी न वा तत्त्वसमास इति विद्वांसो मन्यन्ते। षडध्यायीग्रन्थस्य तत्त्वसमासस्य च कपिलप्रणीतत्वे सुप्राचीनत्वे च मनीषिभिरनयोरेतादृश्या उपेक्षाया न किमपि कारणमुत्प्रेक्ष्यते। अतः, सूत्रषडध्यायी क्रिस्तीयनवमशतब्द्या अनन्तरम् अर्थतो वाचस्पतिमिश्रादुत्तरं, तत्त्वसमासश्च ततोऽपि ऊर्ध्वं विरचित इति नवीनानां सिद्धान्तः।[2] रिचार्डगार्वेमहोदयानां मतेन सूत्रषडध्याय्या रचनाकालस्तु क्रिस्तीयचतुर्दशशताब्दी एव[3] यद्यपि डॉ० सुरेन्द्रदाशगुप्तस्तु पुनरिमां

१. सर्वोपकारिणीवृत्तिकर्तुर्मतेन द्वाविंशतिसूत्रात्मकः ।

२. Surendra Nath Dasgupta, *A History of Indian Philosophy,* Cambridge 1922, Vol. I, p. 212.

३. Richard Garbe, *The Sāmkhya-Pravacana-Bhāṣya,* HOS II, Preface, p. ix.



तावतीमर्वाचीनां न मन्यते[1]। तत्त्वसमासोऽपि तत्तन्मतेन चतुर्दशशतकात्पूर्वं न प्राकाश्यं प्राप।

वस्तुत इदानीमुपलभ्यमानेषु सांख्यग्रन्थेषु कतमः कपिलस्य कृतिः, कपिलस्य कृतिः अद्यत्वे करालेन कालेन ग्रसिता वा न वेत्यादीनां जिज्ञासानां समाधानं न सुकरं प्रतिभाति। ईश्वरकृष्णकृतसांख्यकारिकाणां द्विसप्ततितमकारिकादर्शनात् तदुपजीव्यस्य ग्रन्थस्य षष्टितन्त्रमिति नामासीदिति प्रतीयते।[2] अस्मात्, कपिलकृतमूलग्रन्थ एव षष्टितन्त्राख्य आसीत् स इदानीं लुप्त इत्येके वदन्ति[3], सांख्यप्रवचनसूत्रापराभिधा अद्यत्वे बहुलप्रचलिता सूत्रषडध्याय्येव कपिलकृतं षष्टितन्त्रमित्यन्ये[4], परिमितपदैः सांख्यीयतत्त्वानां प्रतिपादकः परमतखण्डनविरहितस्तत्त्वसमास एव कपिलकृतिरित्यपरे।[5]

षष्टितन्त्रेति न कस्यचिद् ग्रन्थविशेषस्य नाम परन्तु सांख्यसिद्धान्तस्यैव विषयानुरूपाऽभिधा इति श्रीकीथमहोदयस्य पक्षपातः, स पुनरत्र वाचस्पतिसम्मतिमपि चिन्तयति।[6]

कपिलतन्त्रस्य कपिलकृतेर्वा षष्टितन्त्रनाम्नाऽभिहितत्वे तद्गतविचार्यविषयाणां षष्टिसंख्याकत्वमेव निदानम्। के तावत्ते षष्टिसंख्याका विषया इत्यत्रापाततो मतद्वयमुपलभ्यते। सांख्यकारिकानुसारं षष्टिविषयाणामिदं परिगणनम्—

पञ्च विपर्ययाः, नव तुष्टयः, अष्टौ सिद्धयः, अष्टाविंशतिरशक्तयः,[7] दश मौलिकार्थाश्चेति श्रीमान् उदयवीरशास्त्रिमहोदयः। किन्तु कारिकासु कुत्रापि कण्ठतः मौलिकार्थपदस्य परिगणनं नास्ति।[8] परिगणनमिदं तत्त्वकौमुदीकर्तुर-

१. प्रागुल्लिखितो ग्रन्थः, पृ० २२२ ।

२. सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।

३. Surendranath Dasgupta, *A History of Indian Philosophy,* Vol. I. p. 221

४. प० श्रीउदयवीरशास्त्री, सांख्यदर्शन का इतिहास, पृ० १०४–१७३

५. माठरवृत्ति–भूमिका, चौखम्बासंस्कृतसीरीज, पृ० २; Max Müller, *The Six Systems of Indian Philosophy,* London 1919, p. 317.

६. A. B. Keith, *The Sāṃkhya System,* p. 72.

७. पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।
अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥—सांख्यकारिका, ४७।

८. तत्त्वसमाससूत्रे ( १६ ) मूलिकार्थशब्दोऽवलोक्यते यः खलु पुनः कुत्रचित् चूलिकार्थेत्यपि पठ्यते ।

